# श्रीमद्भगवद्गीतायां क्षेत्रज्ञशब्दार्थविचारः
## वक्तव्यशेषः

विद्वद्भिः कृतः अद्वैतमतविमर्शः



प्रकाशनम्

पलिमारुमठः, उडुपि

# श्रीमद्भगवद्गीतायां
# क्षेत्रज्ञशब्दार्थविचारः—वक्तव्यशेषः

विद्वद्भिः कृतः अद्वैतमतविमर्शः

प्रकाशकः

पलिमारुमठम्, उडुपि

# वक्तव्यं किञ्चित्

वेदवेदाङ्गपाठशालया द्वैतमण्डनात्मकः क्षेत्रज्ञशब्दार्थविचारनामकः एकः प्रबन्धः प्रकटीकृत आसीत्। तस्य च खण्डनम्, 'अद्वैतविजयवैजयन्ती- द्वितीयं परिशिष्टम्' इति नाम्ना श्रीकाशिकानन्दमहाभागेन विलिखितं प्रकाशितं च भारतीयसंस्कृतविद्यानिकेतनसंस्थया। तस्योत्तरत्वेन इदं पुस्तकं प्रकटीकृतमस्ति।

अद्वैतविजयवैजयन्त्या आमुखे श्रीमोदी पराङ्कर महोदयेन 'अद्वैते समन्वयः सम्भवति द्वैतिनस्तु हीयमानं स्वपक्षं न सहन्त इत्येष अनुभवः पुष्टिङ्गत इत्येव वक्तव्यम्' इति लिखितम्। गोष्ठ्यामनुपस्थितस्यास्य महाभागस्येदं केवलमज्ञानविजृम्भितमिति मन्तव्यम्। अनेन 22-4-1990 तमे दिनाङ्के आयोजितगोष्ठ्याः संक्षिप्तो वृत्तान्तोऽनिच्छद्भिरप्यस्माभिः प्रकटनीयः संवृत्तः।

दिनत्रये प्रचलितगोष्ठ्यामस्यामेकैकस्मिन् दिने द्वैताद्वैतविशिष्टाद्वैतेष्वन्यतमस्य सिद्धान्तस्य परिशीलनमात्रं, न कस्यापि विजयः पराजयो वेति पूर्वमेव निश्चितमासीत्। द्वितीयदिने श्रीकाशिकानन्दस्वामिनामाध्यक्ष्ये अद्वैतप्रबन्धं श्रीगोडा सुब्रह्मण्यशास्त्रिण उपस्थापयाञ्चक्रुः। तदुपरि च विदुषां चर्चा समजनि। मध्येचर्चं सति च बहुले समयावकाशे अविगणय्य विदुषामभ्यर्थनाम् अध्यक्षमहोदयः स्वीयं प्रवचनमारेभे। प्रथमदिने केवलं दशनिमेषं यावत्प्रभाषितमध्यक्षपदमारूढैः श्रीविद्यामान्यतीर्थैः। परन्तु द्वितीयेऽस्मिन् दिने पञ्चचत्वारिंशन्निमेषपर्यन्तं समग्रां गीतामधिकृत्योपन्यसन्नप्यध्यक्षमहोदयोऽयं न प्रकृतक्षेत्रज्ञवाक्यमधिकृत्य किञ्चिदवोचत्। बाष्पयानोपवेशनाद्यप्रकृतविषयानेवाभाषत। तदा नियोजकत्वेनोपस्थिताः श्रीविश्वेशतीर्थश्रीपादाः निवेदयाञ्चक्रुः "क्षेत्रज्ञवाक्यमधिकृत्य भणन्तु" इति। तावतैव चुकोपाध्यक्षमहोदयः। उच्चैः जगर्ज। ध्वनिवर्धनं च चिक्षेप। अत्र सभ्याः ध्वनिग्राहकं च (Tape Recorder) प्रमाणम्।

किमपराद्धमत्र द्वैतिभिः ? कथं वा हीयमानस्वपक्षत्वं तेषाम् ? कुतो वा प्रवचने प्रायः अप्रस्तुतमेव क्षेत्रज्ञविचारं वेदवेदाङ्गपाठशालया मुद्राप्य काशिकानन्दप्रवचनसङ्ग्रहरूपत्वमारोपितम् ? कथं वा दिनत्रये पूर्वपूर्व-दिनोक्तविषयास्पर्शेन केवलं तत्तन्मतसाधुत्वविमर्शविनोदार्थं प्रवृत्तायां गोष्ठ्यामद्वैतविजयः उद्घोषितो वैजयन्त्याम् ? प्रश्नानामेतेषामुत्तरदायित्व-मायोजकानां श्रीकाशिकानन्दानां च सम्पद्यते ।

इदमपरं कथनीयम् । यद्वादोऽयं तत्त्वदार्ढ्यार्थं सौहार्देन प्रवर्तते । अयमद्वितीयः कर्तव्यो विदुषां योऽयं तत्त्वविमर्शो नाम । तस्मात् परामृशन्तु सर्वे विनोद्वेगमिमां वादकथामिति प्रार्थयामहे ॥

प्रकाशकः

दिनांक 25-12-1991 पलिमारुमठम् उडुपि

# क्षेत्रज्ञशब्दार्थ-विचारः — वक्तव्यशेषः

## (अद्वैतिकृताक्षेपपरिहारः)

तत्वमसिश्रुतिरद्वैतं न प्रतिपादयति। किन्तु द्वैतमेव। यतस्तत्र तत्पदं पञ्चम्यन्तादिरूपं तदायतनत्व तद्दासत्वादिपरं सुपां स्वित्यादेशात्। अत्र यदुक्तं "सुपां स्वित्यादेश इति मौढ्यमात्रम्। विभक्तौ परतः 'त्यदादीनामः' इति सौ परत'स्तदोः सः सावनन्त्ययो' रिति च प्रसक्तेः सत्वमिति रूपापत्तिः। ततश्च यदि लुगुच्यते तदा विभक्तिस्मरणविरहाल्लक्षणा दुर्वारा। लुकि तत्पदोत्तर-तत्पदलक्षणाकाङ्क्षाविरहात्। तत्सत्वे वा यथोक्तसूत्रद्वयप्रवृत्तिर्दुर्वरैव" इति तदयुक्तम्। नपुंसकतच्छब्दस्य स इति रूपमापादयन् हि भवान् तदिति रूपमङ्गीकुर्वन्तं भगवन्तं पाणिनिमेवाक्षिपतीति चित्रमेतत्। किंच 'न केवला प्रकृतिः प्रयोक्तव्ये' ति नियमान्न केवल प्रातिपदिकप्रयोगोऽस्ति। अतो लुकि लुप्तविभक्तिस्मरणमनिच्छोरपि तवापरिहरणीयम्। यदा विभक्तिस्मरणेऽप्यन्वयानुपपत्त्यादिना शाब्दबोधानुदयस्तदैव लक्षणाप्रसक्तिः। विभक्ति-स्मरणाभावे तु लक्षणाबीजस्यापाततः प्रतीतान्वयबाधादिज्ञानस्याभावेन लक्षणाया अप्रसक्तिरेव। केवलप्रातिपदिकस्य अस्मृतविभक्तिकस्यान्वय-बोधकत्वस्यैवाभावेन बोधकत्व एव लक्षणया वा शक्त्या वा बोध इति विचारप्रसक्तिः। एवमपि लक्षणा दुर्वारेति वदन् श्लाघनीयप्रज्ञोऽसि। लुकि लुप्तविभक्तिस्मरणसत्वे यथोक्तसूत्रद्वयप्रवृत्तिर्दुर्वारा इति चाग्रहमात्रम्। 'न लुमताङ्गस्य' इति निषेधात्। लुप्तविभक्तेः पञ्चम्यादित्वेन स इति रूपापादनमप्यशक्यम्।

यदपि "अद्वितीयमित्यस्य

'यथा चोलनृपः साम्राडद्वितीयोऽस्ति भूपतिः।'

इति विशिष्टाद्वैतिकृतश्लोकार्धानुसारेण सदृशद्वितीयाभावपरत्वं यदुक्तं तन्न। अयमद्वितीयो विद्वानित्यादेर्विद्वत्त्वेन सजातीयद्वितीयसत्वेऽपि प्रयोगस्य दर्शनात्। सकलोत्कृष्टत्वेन सादृश्यविवक्षा चेत् तादृशद्वितीयाप्रसिद्ध्या

तन्निषेधो दुर्घटः स्यात्। किञ्च 'शिवं शान्तमद्वैतमि'त्यत्रोक्ताद्वैतपदसमानार्थत्वात् लाक्षणिकप्रयोगस्वीकारानौचित्यमेव। न हि चोलनृपोऽद्वैत इति कश्चित् प्रयुङ्क्ते' इति तन्न। 'यथा चोलनृप' इत्युदाहरणे तवानाश्वासेऽपि 'अस्य गोर्द्वितीयोऽन्वेष्टव्य' इत्यादीनां लोके, 'एक एवाद्वितीयोऽसौ प्रणवो मन्त्र उच्यते' इत्यादीनां शास्त्रे चोदाहरणानां बहुलमुपलम्भात्। तत्प्रामाण्याच्चाद्वितीयशब्दस्य सदृशद्वितीयाभावार्थे शक्तितुल्याया निरूढलक्षणायाः सिद्धेः। प्रत्युत द्वितीयमात्रनिषेधतात्पर्येणाद्वितीयशब्दप्रयोगस्य क्वाप्यभावेन तदर्थकत्वासिद्धेश्च। विद्वत्त्वेन सजातीयस्य सत्त्वे यस्मिन् कस्मिंश्चिद् विदुषि 'अयमद्वितीयो विद्वान्' इति प्रयोगानुपलब्ध्या तद्दर्शनसद्भावं वदतो भवतोऽत्यन्ताप्रामाणिकत्वापाताच्च। सकलोत्कृष्टत्वेन सादृश्यविवक्षायां तादृशाद्वितीयाप्रसिद्ध्या तन्निषेधदुर्घटत्वं वदतो भवत एव 'एक एवाद्वितीयोऽसौ प्रणव' इत्यादि पूर्वोक्तप्रयोगसाधुत्वसमर्थनायासप्राप्तेः। 'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य' इति गीताप्रयोगस्याप्यप्रामाण्यापत्तेश्च। अद्वैतपदस्य भेदाभावार्थकत्वेन द्वितीयाभावार्थकत्वे प्रमाणाभावात्, स्वगतभेदाभावार्थकत्वस्वीकारे च तत्समानार्थकत्वेन भवदुक्तस्याद्वितीयपदस्य द्वितीयसामान्याभावार्थकत्वप्रत्याशाया अयोगाच्च। भवन्मते ब्रह्मणः केवललक्ष्यत्वेन अद्वैतस्य च ब्रह्मरूपत्वेन तदर्थकाद्वैतपदसमानार्थकत्वेऽद्वितीय पदस्य तवापि लाक्षणिकत्वस्यैव प्राप्तेश्च।

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात् सजातीयाद् विजातीयाच्छिलादितः॥

इत्याद्युक्तदिशाऽद्वितीयपदस्य विजातीयभेदवर्जितत्वरूपार्थस्वीकारेऽपि लाक्षणिकार्थत्वप्राप्त्या तवैवानौचित्यदोषप्राप्तेश्च।

## गीतायाः ऐक्ये तात्पर्याभावोपपादनम्

यदपि "क्षेत्रज्ञं चापि मां विद्धी' त्यस्य जीवपरैक्यप्रतिपादनोपक्षेपात्मकत्वे ततः परं जगदसत्यं तदुपादानमविद्येत्यादिकमेव वक्तव्यमासीदिति तन्न। गीतायाः प्रक्रियाग्रन्थत्वविरहात्। लिङ्गादिभिः शास्त्रतात्पर्यस्य ज्ञेयत्वात्। अन्यथा द्रव्यगुणकर्मसामान्यादिदशपदार्थनिरूपणादर्शनात् तदास्पदद्वैतमत-परकत्वं भवतोऽपि स्वप्नायितं स्यादि"ति तन्न। जगदसत्यत्वादीनां प्रक्रियारूपेणात्रावक्तव्यत्वेऽपि अद्वैतमततात्पर्यलिङ्गरूपेण वक्तव्यत्वा-नपायात्। द्वैतास्पदमहाभूताहंकारादिपदार्थानां 'महाभूतान्यहंकार' इत्यादिनोक्तत्वेन गीताया द्वैतमतपरकत्वस्य स्वप्नायिततत्वाप्रसक्तेश्च। भवदीयप्रक्रियाग्रन्थेषूच्यमानानामद्वैतास्पदपदार्थानां प्रामाणिकत्वाय तदुल्ले-खस्य गीतादिशास्त्रेष्वावश्यकत्वाच्च। द्वैतास्पदद्रव्यादिपदार्थानां प्रायः प्रत्यक्षादिसिद्धत्वेन पृथगवक्तव्यत्वाच्च। येषामागमैकवेद्यता तेषामुक्तत्वाच्च। अद्वैतप्रक्रियाया अवैदिकतापरिहाराय सर्ववेदोपनिषत्साररूपगीतायां वक्तव्यत्वाच्च। किञ्च तृतीयषट्के जीवपरैक्यप्रतिपादनोपक्षेपानन्तरं महाभूतादीनां क्षेत्रत्वं यदुच्यते तत्र पूर्वसंगतिरुत्थाप्याकाङ्क्षयैव भवन्मते। अस्मन्मते तूत्थिताकाङ्क्षयेति क्षेत्रज्ञशब्दार्थविचारग्रन्थ एव विवृतमनु-सन्धेयम्। अतो भवन्मत एवोत्थाप्याकांक्षानिवर्तकानामुत्तरवाक्यानां वैयर्थ्यम्।

यदुक्तं "मत्तः परतरं नान्यदिति वचनं तृतीयषट्के नास्ती' ति तत्सत्यमेव। परन्तु तत् जीवपरैक्यप्रतिपादनस्य पूर्ववाक्येनापि विरुद्धत्व प्रदर्शनाभि-प्रायेणोदाहृतं मन्तव्यम्।

यच्चोक्तं "परतरं मा भूत्, परं तु विद्यत एवेति कथं नार्थो भवन्मतेन? तरबर्थोऽविवक्षित इति चेत् तथापि परं नास्ति, समानं त्वस्त्येवेत्यायाति" इति तन्न। अस्मदभिमतार्थानवबोधात्। निर्दुःखचेतनत्वात् परशब्दवाच्या महालक्ष्मीः। तस्याः सकाशात् उत्तमत्वात् परतरो भगवानेव।

नित्यनिर्दुःखरूपत्वात् परा श्रीरेकलैव तु ।
अनन्याधीनरूपत्वाद् असमाधिकसौख्यतः ।
तत्तन्त्रत्वाच्च सर्वस्य विष्णुः परतमो मतः ।
अभावादन्तरान्यस्य त्विहैकार्थौ तरप्तमौ ॥ इत्युक्तेः ।

एवं च अहमेव परतरः । मत्तोऽन्यत् परतरं नास्तीत्यभिप्रायः । न तु मत्तः परतरं नास्तीति । येन परतरं नास्ति परं त्वस्तीत्याद्यापत्तिः ।

यदपि "परतरमित्यत्यन्तभिन्नमन्यन्नास्ति । कल्पितस्याधिष्ठानतोऽत्यन्तभिन्नत्वविरहादि"ति तन्न । 'अत्यन्तभिन्नमन्यन्नास्ती' त्यत्रान्यपदवैयर्थ्यापरिहारात् । अधिष्ठानतोऽत्यन्तभिन्नस्याप्रसिद्धस्य भवन्मते निषेधायोगाच्च ।

"सत्यादिपदलक्ष्यार्थ एव ब्रह्म । वाच्यार्थस्तावदाकाशवाय्वादिकं व्यावहारिकं जगदेवेति तद्भिन्नमसत्यं प्रातिभासिकमसद्वा भवितुमर्हतीति कथ 'मसत्यमप्रतिष्ठं त' इत्यद्वैतवादनिन्दा । न वयं जगदसत्यमिति ब्रूमः । किन्तु मिथ्येत्येव । तच्च पारिभाषिकमि" ति यदुक्तं तदपि न । दृष्टिसृष्टिपक्षे भवन्मते जगतः प्रातिभासिकत्वेनासत्यत्वात् 'असत्यमप्रतिष्ठं त' इत्यस्याद्वैतनिन्दात्वापरिहारात् । किं च जीवपरैक्यप्रतिपादनोपक्षेपानुगुण्याय जगदसत्यत्वादिकमेव वक्तव्यमासीदित्यस्माभिरापादिते जगदसत्यत्वस्याद्वैतप्रक्रियात्वमदूषयित्वैव गीतायाः प्रक्रियाग्रन्थत्वाभावेन समादधता भवता जगदसत्यत्वमनुमतं विज्ञायते । पुनर्वदति भवान् 'न वयं जगदसत्यमिति ब्रूम' इति । अयं व्याघातः । किं च मिथ्यात्वं पारिभाषिकं वदता भवता सदसद्विलक्षणत्वरूपं तदभिप्रेतं स्यात् । तत्र सद्विलक्षणत्वं नामासत्यत्वमेवेति न वयमित्यादि वदतो व्याघातः ।

यदप्युक्तं "यजन्ते नाम यज्ञैस्त इति न माध्यमिकनिन्दा । तैर्यज्ञाकरणात् । किन्त्वद्वैतिनिन्दैवेति तदप्यपेशलम् । यदि खल्वत्र नामयज्ञो नामजपयज्ञो दम्भेन द्वैतिभिः क्रियमाण इति कश्चित् व्याचक्षीत तदा किमुत्तरं भवतः ? बुद्धमतस्य श्रीकृष्णोत्तरकालीनस्य श्रीकृष्णेन निन्दनमप्रसक्तमेव । माध्यमिकत्वोक्तिस्तु

तत्सादृश्यमात्रेणाचार्याणाम्। बुद्धात् पूर्वमपि नास्तिका आसन् दम्भाद्यज्ञादिकमपि कुर्वाणाः" । इति तदपि न। नह्यत्र द्वैतिनां नास्तिकानां वा प्रसक्तिः। तेषां जगत्सत्यत्ववादित्वात्। न वा माध्यमिकानाम्। तैर्यज्ञाकरणात्। अतोऽद्वैतिनामेव जगदसत्यत्ववादिनां यज्ञकारिणां च निन्दात्र सुष्ठु युज्यते। बुद्धमतस्य क्षीकृष्णोत्तरकालीनत्वेऽपि सर्वज्ञश्रीकृष्णेन भविष्यज्ञानवता तन्निन्दनं नाप्रसक्तम्। अन्यथा व्यासेन ब्रह्मसूत्रेषु बुद्धमतनिराकरणमप्ययुक्तं स्यात्। एवं 'तद्धैक आहु' रित्यादिना छान्दोग्ये बुद्धमतनिराकरणमप्यसंभवि स्यात्।

यच्चोक्तं "जगत् सदसद्विलक्षणमेवोपेयते। यत्तु सद्विलक्षणत्वमात्रं लाधवाद्युक्तमिति, अस्त्वनुमाने तावन्मात्रप्रवेशो लाघवात्। किन्तु लाघवाद्वह्निरेव साध्यो न तु प्रमेयवह्निरित्येतावता वह्नेरप्रमेयत्वं मूढा एव ब्रूयुः। एतैः सह शास्त्रचर्चाऽप्युपहास एवे" ति तन्न। भावानवबोधात्। सद्विलक्षणत्वमात्रं लाघवाद्युक्तमित्यस्य हि लाघवात् सद्विलक्षणत्वमात्रं साधयितुं युक्तमित्येवास्माकमभिप्रायः। न तु असद्विलक्षणत्वं विहाय केवलं सद्विलक्षणत्वं भवता जगत्यंगीकृतमिति। येन वह्निरप्रमेय इत्युक्ति साम्यापादनं स्यात्। एवं च सद्विलक्षणत्वमित्यसत्यत्वमित्यनयोरैकार्थ्यात् सद्विलक्षणत्ववादिनो भवन्तोऽसत्यत्ववादिन एवेति भवन्निन्दाऽपरिहार्येव।

यदुक्त"मेकजीववादस्य दृष्टिसृष्टिवादस्य च रहस्यमसाम्प्रदायिकैर्ज्ञातुमशक्य" मिति तदङ्गीक्रियत एव। परं तु साम्प्रदायिकैरपि ब्रह्मान्यत् सर्वमनिर्वचनीयं वदद्भिरेकजीववाददृष्टिसृष्टिवादयोरप्यनिर्वचनीयत्वेनाज्ञेयत्वाभ्युपगमात्, असाम्प्रदायिकैर्न ज्ञायत इति किमत्र चित्रम्? भवता तु सर्वं विहायैकजीववाददृष्टिसृष्टिवादयोरेव विशिष्याज्ञेयत्वमुच्यत इति चित्रमेतत्।

यदपि "ईश्वरोऽहमित्यादिरद्वैतिनिन्देति साहसम्। महावाक्येषु भागत्यागलक्षणायाः स्वीकारात्। आसुरा ईश्वरोऽहमिति न भागत्यागेन ब्रुवते। किन्तु दम्भदर्पाभिमानादियुक्ता भूमिधनादीश्वरं, परमसमर्थं वा स्वं मन्वाना इति छलवचनमिदं भवदीयमि" ति तन्न। ईश्वरोऽहमिति भूमिधनादीश्वरग्रहणे

आढ्यशब्देन गतार्थता। महासमर्थग्रहणे बलवानित्यनेन पुनरुक्तता। तस्मादीश्वरोऽहमित्यस्याच्युतोऽहमित्येवार्थः। तेन 'मेने स्वात्मानमच्युतं' पौण्ड्रकवासुदेवो दैत्यस्वभाव आत्मानमच्युतं मेने इति भागवतवचनसंवादोऽपि सुलभः। न चात्र भागत्यागस्याकृतत्वान्नाद्वैतिनिन्देति वाच्यम्। भागत्यागस्य सर्वज्ञत्वादिविशेषणभागमिथ्यात्वस्वीकारादन्यस्याभावेन 'असत्यमप्रतिष्ठं ते जगदाहु' रिति तस्यापि कृतत्वात् । अन्यथा भूमिधनादीश्वरत्वमात्मनो मन्यमानैर्जगदसत्यत्वोक्तेर्वैयर्थ्यात्। अत्रोक्ता जगदसत्यत्ववादिनोऽन्ये ईश्वरोऽहमिति वादिनश्चान्ये इति तु निर्मूलम्। अन्यपदाभावात्। अध्याहारे च प्रतीतैकवाक्यत्वभङ्गात्।

यदुक्त"मीश्वरः सर्वभूतानामित्यादिर्नोपसंहारः। किन्तु सर्वधर्मान् परित्यज्येत्यादिरेव। तद्व्याख्या शाङ्करभाष्यादौ द्रष्टव्ये" ति तन्न। ईश्वरः सर्वभूतानामिति सर्वधर्मानिति चानयोर्द्वयोरपि शरणागतिरूपैकार्थ्येनैकवाक्यत्वात्। तदर्थस्यातिस्फुटत्वेन शाङ्करभाष्याद्यनपेक्षणाच्च। 'इति ते ज्ञानमाख्यात'मिति लिङ्गेन 'ईश्वरः सर्वभूताना'मित्यस्योपसंहाररूपतावगमाच्च।

यदप्युक्तं "पूर्वापरपरामर्शे 'मद्भावायोपपद्यते', 'विभक्तमिव', 'परमात्मेति चाप्युक्त' , 'ब्रह्म सम्पद्यते' , 'ब्रह्मभूयाय कल्पते' 'सर्वस्य चाहं हृदि' 'मामात्मपरदेहेषु प्रद्विषन्तः' , 'मां चैवान्तःशरीरस्थं' , 'मामेकं शरणं व्रज' इत्युत्तरत्र, 'वासुदेवः सर्व' मित्यादि पूर्वत्र, 'यो लोकत्रयमाविश्ये' त्यनेन गतार्थत्वात् 'सर्वस्य चाहं हृदि' इत्यादि जीवात्मना स्थितिरेवोक्ते" ति तन्न। 'मयि भावाय, ब्रह्मणि भवाये' त्यादि विग्रहस्वीकारेण जीवस्य परमात्मनि स्थितेरेव लाभेन जीवेश्वरभेदस्यैव प्रतीतेः। मभ्दावाय ब्रह्मभूयायेत्यनयोर्ब्रह्मत्वायेत्यर्थस्वीकारे ब्रह्मत्वरूपधर्मस्यैव सिद्ध्या निर्धर्मकत्वसिध्दान्तविलयापत्तेश्च। ब्रह्मत्वस्य सदातनत्वेन ज्ञानसाध्यत्वायोगाच्च। किञ्च अन्यान्यपि त्वदुदाहृतानि वाक्यानि ममैवानुकूलानि। तथा हि, विभक्तमिवेति परमात्मरूपेषु भेदाभावमाह। 'ज्योतिषामपि तज्ज्योतिः तमसः परमुच्यते'

इत्युक्तस्य तमसः परत्वस्य जीवेऽयोगात्। 'ब्रह्म सम्पद्यते' इति ब्रह्माप्नोतीत्यर्थः। ग्रामं प्राप्नोतीत्युक्ते ग्रामाद् भेद इव प्रकृते ब्रह्मणो भेदः स्पष्टः। 'परमात्मेति चाप्युक्तः' इत्यपि 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति वाक्यसंवादेन शाङ्करभाष्ये व्याख्याततत्वेन स्पष्टं भेदप्रतिपादकम्। 'मामात्मपरदेहेषु प्रद्विषन्त' इत्यपि 'किं च, ते मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च, तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तः। मच्छासनातिवर्तित्वं प्रद्वेषः। तं कुर्वन्तः' इति शाङ्करभाष्ये व्याख्याततत्वेन द्वेषकर्मत्वतत्कर्तृत्वाभ्यां स्पष्टं जीवेश्वरभेदप्रतिपादकम्। 'वासुदेवः सर्वमि' त्यनेनापि सर्वव्याप्तिरेवोच्यते। सर्वाभेदस्य बाधितत्वात्। तथा च गीता 'सर्वं समाप्नोषि ततोसि सर्व' इति। 'सर्वस्य चाहं हृदि संनिविष्टः' इत्यत्रापि 'भ्रामयन् सर्वभूतानी' ति वाक्याविरोधाय सर्वनियामकत्वेनैव हृदि स्थितिरुक्तेति मन्तव्यम्। जीवात्मना स्थितेस्तद्विरुद्धत्वात्।

## आत्मशब्दस्य परमात्मनि मुख्यत्वसमर्थनम्।

यदुक्तं "एवमात्मशब्दोऽपि। अन्यथा 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इति विधिवाक्ये परमात्मन्यात्मशब्दस्य मुख्यतया भवता स्वीकारात् मुख्यार्थे गौणार्थस्याप्रसक्तत्वात् 'न विधौ परः शब्दार्थ' इति न्यायाच्च जीवात्मनोऽप्रसक्तत्वात् संशयविरहेण वाक्यान्वयाधिकरणमेव नावकल्पेत" इत्यादि तन्न। शाङ्करभाष्योक्तवाक्यान्वयाधिकरणपूर्वपक्षस्य द्वैतिभिरकृतत्वात्। अन्यैः कृतं पूर्वपक्षमवलम्ब्यान्योपरि दूषणदानस्यायुक्तत्वात्।

यदपि "गौणश्चेन्नात्मशब्दादित्यत्र जडप्रकृतिवारणमात्मशब्देन कृतमि' ति तन्न। श्रीव्यासतीर्थश्रीमच्चरणैः तात्पर्यचन्द्रिकायां भवदभिमतस्य सूत्रार्थस्य निराकरणात्। शाङ्करपादभूषणादिभिस्तद्दूषणस्याप्यकृतत्वात्। किञ्च तत्सूत्रीयशाङ्करभाष्ये 'तत्सत्यं स आत्मे' ति श्रुतिरुदाहृता। सा च 'तद्विजिज्ञासस्व तद्ब्रह्मे' ति श्रुतिर्यथा परमात्मनो ब्रह्मशब्दमुख्यार्थत्वमभिप्रैति तथा तस्यात्मशब्दमुख्यार्थत्वमपि विवक्षति।

यदुक्तं "अयमात्मशब्दः परमात्मपरिग्रह एव सम्यगवकल्पते न प्रधानादिपरिग्रहे इत्यादि भाष्यं तु परमात्ममुख्यार्थकत्वे व्यर्थमेव स्यात्। ततश्च

मुख्यार्थजीवप्रसक्तिवारणाय तथोक्तिरिति युक्तमि"ति तदपि भाष्यार्था-दर्शनमूलकम्। तत्र वार्तिककारेण 'तमेवैकं जानथ आत्मानमिति तद्वाचकात्म-शब्दप्रयोगात्। न च जीवात्मन्यनैकान्तिकोऽयं हेतुरिति वाच्यम्। तस्याप्यमुख्यात्मत्वात् मुख्यया वृत्त्या तत्रात्मशब्दस्याप्रवृत्तेः। एतदेव दर्शयितुं स्वशब्दादिति हेतुः कृतः। नात्मशब्दादिति' इति ह्युक्तम्। किञ्च 'आत्मत्वं तावत् मुख्यया वृत्त्या परमेश्वर उपपद्यते। स आत्मा तत्त्वमसीति श्रुतेः' 'एष त आत्माऽन्तर्याम्यमृत इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते।' इत्यादिशाङ्करभाष्यवाक्यान्यपि भवतान्यथयितुमशक्यानि। तस्मादात्मशब्दः मुख्यतया विष्णावेव॥

यदप्युक्तं "परमात्मा पुरुषः परः इत्यादौ परमत्वादि-विशेषणमात्मादिशब्दानां परमात्मरूढत्वे व्यर्थं स्यात्। न च जीवात्माप्यर्थोऽस्तीति तद्वारणाय परमत्वादिविशेषणमिति वाच्यम्। जीवात्मनि चेतनत्वेन सदृशे लक्षणयैवोपपत्तौ नानार्थकल्पनावैयर्थ्यात्" इति तन्न। 'आत्मा चित्ते धृतौ यत्ने' इत्याद्यमरकोशे आत्मशब्दस्य जीवपरमात्मादि-नानार्थकत्वोक्त्या नानार्थकल्पनावैयर्थ्यमिति भवद्वचनस्य वैयात्यमात्रत्वात्। आत्मशब्दस्य परमात्मनि गौणत्वपक्षे परमत्वविशेषणस्य यथा झटिति परमात्मोपस्थितिहेतुत्वेन सार्थक्यं तथा वाचकत्वपक्षेऽपि, जीवे भगवति च तच्छब्दस्य प्रयोगेण युगपदुभयोपस्थितिवारणार्थं तदिति वक्तुं शक्यत्वाच्च।

"किञ्चैवं 'परमे व्योमन्' 'आकाशाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादि श्रुतौ परमात्मार्थसत्त्वात् व्योमाकाशादिशब्दानामपि परमात्मार्थकत्वं स्यात्। नचैतदङ्गीक्रियते। अत एवाकाशादिपदानां परमात्मनि शक्तिरेवेति पूर्वाचार्यमतमाचार्यवाचस्पतिमिश्रैर्निरस्तम्" इत्युक्तमपि न साधु। न चैतदङ्गीक्रियत इति वचनस्याज्ञानमूलकत्वात्। श्रीमध्वाचार्यैर्भगवतः सर्वशब्दवाच्यत्वस्य सप्रमाणं समर्थितत्वेन तस्य सर्वैरप्यङ्गीकार्यत्वात्। वाचस्पतिमिश्रैः केवल युक्त्याऽवाच्यत्वसमर्थनात् आगमप्रमाणस्यानुक्तत्वात् केवलयुक्तेश्चाप्रतिष्ठानात् तन्नाङ्गीकार्यमिति वदामः।

"आत्मादिशब्दानां परमात्मार्थ इति भवदुक्तिश्च 'लोके यः शब्दः यमर्थं बोधयति स तमेव वेदेऽपी' ति स्वोदाहृतवचनविरुद्धा चे" त्यपि न साधु। 'लोके यः शब्द' इत्यादिनियमस्य सापवादत्वात्। यस्य हि लौकिकालौकिकोभयार्थत्वे प्रमाणमस्ति तस्य शब्दस्य तादृशोभयार्थोऽपि ग्राह्य एव। अन्यथा लोके तरुगुल्मादौ प्रसिद्धस्योभ्दिच्छब्दस्य वेदे तन्नामकयागार्थत्वं भज्येत। प्रकृते चात्मशब्दस्य जीवपरमात्मोभयार्थत्वेऽस्ति कोशादिप्रमाणमिति उक्तो नियमस्त्याज्य एव। अद्वितीयशब्दे तु विजातीयद्वितीयराहित्य-रूपभवदुक्तार्थसत्त्वे प्रमाणाभावात् स नियमो ग्राह्य एव।

"प्रकृतिपुरुषयोः सांख्यमात्रप्रसिद्धत्वं नास्माभिरुक्तम् इति तदभावोक्तिरनुक्तोपालम्भमात्रम्। अस्मद्वचने मात्रपदाभावात्। ततश्च अन्यत्र तत्प्रयोगप्रदर्शनं वृथैव" इत्यपि न। भावानवबोधात्। 'क्षेत्रज्ञ आत्मा पुरुष इति कोशपाठे सांख्यप्रतिपादितप्रकृतिपुरुषयोरेव पर्यायोक्तिः प्रतीयत' इति हि भवद्वचनम्। तत्र प्रतीतौ को हेतुः? प्रकृतिपुरुषयोः सांख्यमात्रप्रसिद्धत्वं भवेत्। अन्यथा गीतादिष्वन्यशास्त्रेष्वपि तयोः अन्यत्र प्रसिद्धत्वे सांख्यप्रतिपादितयोरेव तयोः पर्यायोक्तिरिति तव निर्धारणासम्भवात्। अतो भवद्वचने मात्रपदमप्रयुज्यमानमप्यस्तीति ज्ञायते। अतो नानुक्तोपालम्भः।

## क्षेत्रज्ञशब्दस्य परमात्मार्थत्वसमर्थनम्

यच्चोक्तं "यथा किञ्चिद्धर्मान्तरपुरस्कारेण क्षेत्रज्ञादितः पृथक् भवन्मते प्राण्यादयः पठिताः तथा नारायणादितो धर्मान्तरान्तर्यामित्वादिपुरस्कारेण क्षेत्रज्ञादयः ईश्वरपर्यायाः पृथक् पठ्यन्ते। तत्र कथं मन्मते दोष इति चेत् पठ्यन्तां पृथक् किन्तु नारायणपर्यायसमीप एव स्वर्गवर्ग एव किमिति न पठिताः? कुतो दूरे बुद्धिवर्गे पठिताः? न हि बुद्धिमात्रान्तर्यामी सः येन साङ्गत्यं स्यात्। स हि पृथिव्यादिसकलजगदन्तर्याम्येव। तस्मादन्तर्यामिणि क्वाचित्कप्रयोगो भाक्त एवे" ति तन्न। नारायणादिशब्दानां नारायणमात्रवाचकत्वं क्षेत्रज्ञादिशब्दानां तु अन्यवाचकत्वमपीति विशेषसूचनार्थं दूरे पाठोपपत्तेः। बुद्धिवर्गे पाठसाङ्गत्यविरहस्तु भवतोऽपि समानः। वस्तुतो बुद्धिवर्गे पठिता इत्युक्तिः

प्रामादिकी। कालवर्गे पठितत्वात्। अन्तर्यामिणि क्षेत्रज्ञादिशब्दप्रयोगस्य क्वाचित्कत्वोक्तिर्भवतः सम्यक् शास्त्रापठनमूलिकेत्युपेक्ष्यते। अतो नान्तर्यामिणि तस्य भाक्तता।

"क्षेत्रज्ञत्वं न शुद्धस्य भवन्मते द्रष्टृत्वस्य जडविशिष्टाहमर्थधर्मत्वात् इत्यादिकं वचनं भवतः सिद्धान्तानभिज्ञतानिबन्धनम्। प्रकाशरूप एव प्रकाशकत्वेन व्यवह्रियते। न हि सूर्यप्रकाशो घटं प्रकाशयतीत्युक्ते स्वातिरिक्तप्रकाशकर्तृत्वं सूर्यप्रकाशे प्रतीयत इत्यन्यत्र विस्तरः" इत्यप्यसाधु। 'सूर्यप्रकाशः घटं प्रकाशयती' त्यस्य 'घटनिष्ठप्रकाशसम्बन्धानुकूलव्यापाराश्रय' इति वा 'घटनिष्ठज्ञानविषयत्वानुकूलव्यपाराश्रय' इति वार्थः। न तु 'घटसम्बद्धप्रकाशरूप' इति। अतः क्षेत्रज्ञ इत्यस्यापि क्षेत्रज्ञानकर्तृत्वमेवार्थः। न तु क्षेत्रज्ञानाभेदः। येन शुद्धेऽपि क्षेत्रज्ञत्वं घटेत। किञ्च सिद्धान्तानभिज्ञत्वं तवैव। यतो महावाक्येषु भागत्यागेनैवैक्यप्रतिपादनमिति भवत्सिद्धान्तः। 'क्षेत्रज्ञपदस्य क्षेत्रज्ञानाभिन्नः शुद्धात्मा स्वारसिक एवार्थ' इति भवानिदानीं भणति।

यच्चोक्तं "ननु भगवता यौगिकार्थः प्रदर्श्यते। कुतो भवता बलाद् रूढ्यर्थो गृह्यते क्षेत्रज्ञ शब्दस्येति चेत् एवं सति जीवेऽपि क्षेत्रं जानातीति जीवार्थकत्वं भवता कथं वार्यताम्? नच महाभूतादि सर्वक्षेत्रज्ञानं न जीवस्येति वाच्यम्। योगिनां सत्त्वात् सर्वत्वविशेषणानुक्तेश्च। किञ्च क्षेत्रक्षेत्रज्ञयोर्ज्ञानमित्युच्यमानं क्षेत्रज्ञानं कस्मिंश्चिज्जीवे भवति न वा? यदि न भवति तदा व्यर्था तदुक्तिः। परमात्मनि यत् तादृशं ज्ञानं तादृशं ज्ञानं ममेति कथनस्य वैयर्थ्यात्। अथ कस्मिंश्चिज्जीवे विद्यते तदा स क्षेत्रज्ञो जीवः, क्षेत्रज्ञं चापि मां विद्धीति वचनविषयः कथं न भवति?" इति तदपि न। भगवत्प्रदर्शितयौगिकार्थानङ्गीकारेण रूढिपरिग्रहणे कारणानुक्तेर्भवदुक्तेरनुत्तरत्वात्। अस्मन्मते भवदुक्तातिप्रसङ्गस्तु न। योगिनामपि सर्वक्षेत्रज्ञत्वाभावात्। ईश्वरस्यैव मुख्यं सर्वक्षेत्रज्ञत्वमित्यभ्युपगमात्। एवं च योगाश्रयणे ईश्वरे ईश्वराभेदः सिद्ध्यति, न जीवाभेद इति न भवदभिमतसिद्धिः।

न च सर्वत्वविशेषणानुक्तेर्बाधकत्वम्। उत्तरत्र महाभूतादिरूपसर्वप्रपञ्चस्य क्षेत्रशब्दार्थत्वकथनेन सर्वत्वविशेषणस्य विवक्षितत्वसिद्धेः।

क्षेत्रज्ञानमुत्तरत्रोच्यमानं जीवे न भवतीति पक्षोऽनङ्गीकारपराहतः। अतो न तदुक्तिवैयर्थ्यप्रसक्तिः। न चैतावता जीवस्य क्षेत्रज्ञत्वेन क्षेत्रज्ञं चापीतिवचनविषयत्वापत्तिः। महाभूतादीनि क्षेत्राणीति ज्ञानं खलु क्षेत्रज्ञानमुत्तरत्रोच्यमानम्। तच्चास्ति जीवेपि। क्षेत्रज्ञत्वं तु महाभूतादीनां क्षेत्राणां विशिष्यापरोक्षज्ञानं विवक्षितम्। तच्च ज्ञानमीश्वरस्यैवेति न जीवस्य क्षेत्रज्ञत्वप्रसक्तिः।

यदप्युक्तं "योगार्थासंभवे रूढ्यर्थ इति विपरीतम्। योगाद् रूढिर्बलीयसीत्यस्यैव प्रसिद्धत्वादि"ति तदयुक्तम्। 'भवेतां यदि वृक्षस्य वाजिकर्णौ कथंचने'त्यस्मदुदाहृतमीमांसान्यायविरोधात्। योगाद्रूढिर्बलीयसीति तु यत्र शब्दस्यैकत्र योगोऽन्यत्र च रूढिस्तत्रैव। तत्र रूढ्यर्थ एव ग्राह्यो न योगार्थः। मुख्यामुख्ययोः मुख्ये कार्यसंप्रत्ययात्। प्रकृते केवलयोगाङ्गीकारेण एतन्न्यायानवसरात्।

"योगस्यातिप्रसक्तौ रूढ्यङ्गीकार इत्ययुक्तम्। कुत्रातिप्रसक्तिः? अरूढ्यर्थे चेत् सिद्धं रूढ्यर्थमुख्यत्वम्।" इत्यादिकमपि न युक्तम्। पङ्कजनिकर्तृत्वस्य कुत्रातिप्रसक्तिः? सत्यपि प्रवृत्तिनिमित्ते यत्र प्रामाणिकानां न तच्छब्दप्रयोगः तत्रेति चेत् प्रकृतेप्येवमेव। सत्यपि क्षेत्रज्ञानवत्त्वरूपे प्रवृत्तिनिमित्ते क्वचित् क्षेत्रज्ञशब्दस्य प्रामाणिकप्रयोगाभावे तत्रातिप्रसक्तिपरिहाराय अङ्गीकार्या रूढिः। नचैतदस्ति प्रकृते इत्यभिप्रायः।

"योगार्थतावच्छेदकविशिष्टस्य न परेणैक्यमिति तु सम्यगाह भवान्। अत एव भागत्यागं वयं ब्रूमः" इत्यपि न। 'क्षेत्रासंभिन्नार्थबोधनाय यौगिकार्थप्रदर्शनमि' ति पूर्वं वैजयन्त्यामुक्त्वेदानीं 'भागत्यागं वयं ब्रूम' इति वचनस्य व्याहतत्वात्।

## सहस्रनामप्रामाण्येन क्षेत्रज्ञशब्दस्य विष्णौ शक्तत्वसमर्थनम्

" विष्णोर्नामसहस्रं मे श्रृण्विति न नाम्नां विष्णुशक्तत्वनिश्चायकम्। न हि तन्नामत्वमेव तच्छक्तत्वं, यानि नामानि गौणानीति वदतो व्याघातापत्ते" रिति चायुक्तम्। तन्नामत्वस्य तच्छक्तत्वे बाधकाभावात्। गौणानीत्यस्य गुणप्रवृत्तिनिमित्तकत्वार्थकत्वात् गुणवृत्तिमदर्थकत्वाभावात्। सहस्रनाम्नां स्तोत्रत्वोपपत्तये गुणप्रवृत्तिनिमित्तकत्वस्य वक्तव्यत्वाच्च। गौणवृत्त्यभिप्रायकत्वे, प्रशंसाप्रसङ्गे तद्विरुद्धं गौणानि नामानीति तदुद्घाटने प्रयोजनाभावाच्च। 'गौणानि गुणसम्बन्धीनी' ति शाङ्करभाष्यदर्शनाच्च।

'विष्णुजपार्थतया नामानि पठ्यन्त इत्यस्मदीये वाक्ये केवलपदं योजयित्वार्थनिरपेक्षतामापाद्य भवता दोषापादनं तद्विदुषां न शोभावहम्। तज्जपस्तदर्थभावनमिति पातञ्जलवचनात् जपस्यार्थस्मरणाविरोधित्वादि' त्यपि न युक्तम्। 'न हि क्षेत्रज्ञपदस्य विष्णुरर्थ इति सहस्रनामनि कथितमि' ति भवदीयपूर्ववाक्यबलेनास्माभिः केवलपदयोजनात्। अवधारणाभावेनार्थस्मारकत्वाप्रतिषेधे तु स्मारकत्वेन वाचकत्वस्यैव प्राप्तेः। लक्षकत्वे गौणानीति तदुक्तेर्वैयर्थ्यस्योक्तत्वात्।

"यद्यपि पद्मनाभादिपदानां विष्णौ शक्तत्वमप्यस्ति। तथापि तानि वक्ष्याम्यशेषत इत्यत्राशेषपदेन सहस्रत्वमभिप्रेतं तदा पद्मनाभादिनामभिरपि तदर्थगुणमात्रग्रहणं स्यात्। विष्णुनामत्वेनोक्ततया विष्णुत्वस्य सर्वत्रानुवर्तमानतयैव सिद्धेः। न च गुणमात्रप्रतिपादकत्वे विष्णुनामत्वं न स्यादिति वाच्यम्। तादृशगुणवत्त्वेन विष्णुनामत्वाक्षतेः। न हि द्रव्याणीत्युक्ते घटोऽनुक्तः स्यात्। पृथिव्यादीनां सर्वेषां द्रव्यनामत्वात्। न च विष्णुत्वावच्छिन्नबोधकत्वमेव तन्नामत्वमिति वाच्यम्। पृथिवीत्वाद्यवच्छिन्नबोधकत्वविरहेण नवानामपि पृथिव्यादीनां द्रव्यमिति नाम न चेत् कस्य नाम द्रव्यमिति स्यात्" इत्युक्तमपि न। द्रव्यादिपदानां घटादाविव क्षेत्रज्ञादिपदानां विष्णुत्वावच्छिन्ने शक्त्यभावेऽपि क्षेत्रज्ञानरूपगुणवत्त्वेन विष्णौ

शक्तिरित्यङ्गीकारे बाधकाभावात्। एवं च 'क्षेत्रज्ञं चापि मां विद्धी' ति क्षेत्रज्ञाभेदकथनेऽपि यथा 'द्रव्यं घट' इत्युक्ते घटे घटाभेद एव सिद्ध्यति न पटाद्यभेदः तथा ईश्वरे ईश्वराभेद एव सिद्ध्यति न जीवाभेद इति भवदभिमतासिद्धिः।

"सर्वः शर्वः शिवः स्थाणुरिति तत्र पाठसत्वात् शिवादिपदानां विष्णुत्वावच्छिन्नशक्तत्वात् 'नमः शिवाय च शिवतराय चे' ति वेदोक्त नमः शिवायमन्त्रमेव कुतो न भवन्तो वैष्णवा जपन्ति ? शङ्करार्थत्वमप्यस्ति इति चेत् वानरार्थत्वमप्यस्तीति हर्यादिमन्त्रानपि न जपेयुः" इत्यप्यसाधु। शिवपदस्य विष्णुत्वावच्छिन्नशक्तत्वेऽपि शङ्करार्थत्वस्यापि सद्भावेन नमः शिवायेति मन्त्रस्य शङ्करे तात्पर्यवशात् शङ्करध्यानपूर्वकं वैष्णवैरस्माभिस्तज्जपः क्रियते। विष्णुसहस्रनामान्तर्गततया तु शिवपदस्य विष्णौ तात्पर्यवशात् विष्णुध्यानपूर्वकमेव तज्जपः क्रियते। मन्त्राणां तत्तद्देवता-तात्पर्यमनादिपरम्परयैव ज्ञेयमिति न कुचोद्यावकाशः। हर्यादिमन्त्राणां वानरादौ तात्पर्यस्य बाधितत्वादेव वानरादिभावनया तज्जपाभाव इति।

"विष्णुत्वावच्छिन्नशक्तत्वे सर्वो नाम कश्चित्तस्मै सर्वाय नम इतिवत् विश्वाय नम इति वक्तव्यं स्यात् " इति तु इष्टापत्त्या परिह्रियते। विश्वशब्दस्य अवयववृत्त्यैव विष्णौ शक्तत्वाभ्युपगमात्। अन्यथा तस्य गुणप्रतिपादकत्वानुपपत्तेः। अत एव शाङ्करे भाष्ये 'विशतीति विश्वं 'इति व्युत्पत्तिर्दर्शिता। उपनीतभानमात्रेण विष्णुनामत्वाभ्युपगमे घटादिशब्दा अपि कुतो न तत्र पठिताः? मुक्तानां परमा गतिरित्यादौ अलुक्समासाभ्युपगमेन शक्त्यैव विष्णुप्रातिपादकत्वं सम्मतम्॥

न च वाचस्पत्यादिकोशेषु नामसहस्रस्य विष्णुत्वावच्छिन्नार्थाप्रदर्शनात् तदर्थकत्वाभावः। अद्वैतिप्रसिद्धानामनन्तादिपदानां सर्ववस्त्वात्मकत्वाद्यर्थाना-मपि वाचस्पत्यादिकोशेष्वप्रदर्शनसाम्यात्।

यच्चोक्तं "व्याकरणकोशादयः शब्दसाधुत्वतदर्थप्रत्यायनादि-मुख्यप्रयोजनतया प्रवृत्ता इति ततः शक्तिनिर्णयो भवति। विष्णुसहस्रनाम तु

'यशः प्राप्नोति विपुल' मित्यादि फलप्रयोजकपुण्यमुख्यप्रयोजकतया प्रवृत्तमिति शक्तिग्रहार्थत्वविरहाद् शक्तिनिर्णायनमयुक्तमेव। शक्तिं विनापि तत्तन्नामतः पुण्यसम्भवात्" इति तदपि न। 'यन्न दुःखेन सम्भिन्न' मित्यादि श्रुतिवचनबलात् स्वर्गपदस्य शक्तिग्रहणमिव सहस्रनामतोऽपि क्षेत्रज्ञादिपदानां शक्तिग्रहणसम्भवात्। अन्यार्थं प्रवृत्तत्वस्य कर्मब्रह्मस्वरूपप्रतिपादनार्थं प्रवृत्तयन्नदुःखेनेति श्रुतेरिव पुण्यार्थं प्रवृत्तसहस्रनाम्नोऽपि साम्यात् तस्य शक्तिग्राहकत्वाविरोधित्वात्। अस्तु वा विष्णुसहस्रनाम्नां शक्तिग्राहकप्रमाणत्वाभावः। तथापि क्षेत्रज्ञादिपदानां जीवमात्रे त्वदुक्तरूढिनिराकरणार्थमन्यत्रप्रयोगबाहुल्यप्रदर्शनार्थं विष्णुसहस्रनामभागवतादिवचनान्युदाहृतानीति सन्तुष्यताम्।

## क्षेत्रज्ञपदस्य विष्णौ लाक्षणिकत्वभङ्गः

यच्चोक्तं "गङ्गादिपदानां तीरादौ बहुलप्रयोगसत्त्वेऽपि न तीरत्वावच्छिन्ने शक्तिः। एवं क्वचिदन्तर्यामिणि श्रेत्रज्ञादिपदानां प्रयोगेऽपि लाघवाद् जीवात्मनि शक्तिः। अन्तर्यामिणि तदभिन्नत्वतन्नियामकत्वादिसम्बन्धमादाय लक्षणयैवोपपत्तेः। अन्याय्यं च अनेकार्थत्वमिति न्यायात्।" इति तदपि न। एवं तर्हि समानन्यायाद् वेदेषु जीवेश्वरैक्यबोधकं वाक्यं क्वाचित्कं। भेदबोधकं तु बहुलमित्यतो भेदवाक्यानां मुख्यार्थत्वमैक्यवाक्यानां सादृश्यादिनाऽमुख्यार्थत्वमिति कुतो न स्यात्? प्रयोगबाहुल्यस्यास्मदादिभिर्निर्धारणासम्भवात् कोशशिष्टप्रयोगादिप्रमाणबलादेव शक्तिनिर्धारणस्य कर्तव्यत्वात् क्षेत्रज्ञपदस्यान्तर्यामिणि शिष्टप्रयोगे वाचस्पत्यादिकोशप्रामाणे च विद्यमाने तत्र लक्षणैवेति निर्धारणं साहसमात्रम्। अन्याय्यं चानेकार्थत्वमिति वदता शबरमुनिना किं कस्यापि शब्दस्य नानेकार्थत्वमङ्गीक्रियते? अतो यत्किञ्चिदेतत्।

यदपि "जीवात्मत्वस्य न्यायमते जातित्वाद् तस्या अखण्डत्वाद् अन्तर्यामित्वस्य च सखण्डस्य गुरुत्वाद् लाघवेन जीवात्मत्वावच्छिन्ने

शक्तिरन्तर्यामिणि लक्षणेत्येव युक्तम्।" इति तन्न। हरिशब्दस्य कपित्वजात्यवच्छिन्न एव शक्तिः। पापहारिणि हरौ लक्षणेति प्रसङ्गात्।

यदप्युक्तं "प्रमाणतया भवदुपन्यस्तवाचस्पत्यकोशे जीवार्थकत्वमपि क्षेत्रज्ञपदस्य दर्शितमस्ति। कथं तन्नाद्राक्षीद् भवानिति चित्रम्। अमरप्रामाण्येन तत्रैव जीवार्थकत्वं दर्शितमपि अमरे परमात्मपरत्वं क्षेत्रज्ञादिपदानां भवता कथं निरणायीत्यपि चित्रम्। स्वाभिप्रेतांशे वाचस्पत्यादि प्रमाणं इतरांशे विनैव कारणमप्रमाणमित्यर्धजरतीयता कथं?" इति तन्न। क्षेत्रज्ञपदस्य जीवार्थकत्वं हि नास्माभिर्नांगीक्रियते। परमात्मार्थकत्वं नास्तीति तु निराक्रियते। अमरे तु क्षेत्रज्ञादिपदानां जीववाचकत्वमप्यभिप्रेतमेव, किन्तु नोक्तमित्येवास्माकं पक्षः। अत एव नारायणपर्यायेभ्यः पृथक् दूरे तानि पठितानीत्यवोचाम। वाचस्पत्यस्याप्ययमेवाभिप्रायः। अतोऽमरप्रामाण्येन जीवार्थकत्वप्रदर्शकमपि वाचस्पत्यमस्माभिः प्रमाणमेवाङ्गीक्रियत इति कात्रार्धजरतीयता?

यच्चोक्तं "तेजोऽबन्नानां 'हन्ताहमिमास्तिस्रो देवता' इति श्रुतेः देवतात्वं वयं ब्रूमः। सोमलताया देवतात्वं न कुत्राप्युक्तमुपलभ्यत" इति तदपि न। सौम्यचरुमन्त्रेषु सोमलतासोमोभयार्थकसोमपदेन सोमलताया लाभेऽपि अन्यत्र तस्या देवतात्वानुक्तिमात्रेण तदस्वीकारे तेजोऽबन्नानामपि देवतात्वमन्यत्र नोक्तमिति तदपि नाङ्गीकार्यं स्यात्।

'भवांस्तु श्रुत्यनुक्तमपि प्रामाणिककोशाप्रदर्शितमपि क्षेत्रज्ञशब्दस्यान्तर्याम्यर्थकत्वं क्वाचित्कप्रयोगेनोट्टङ्कयति' इत्यपि दुराग्रहमात्रम्। 'हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यती'ति वाचस्पत्योदाहृतप्रमाणबलादस्माभिः क्षेत्रज्ञशब्दस्यान्तर्याम्यर्थकत्वोक्तेः। उदाहृत प्रमाणवचनस्य तत्प्रदर्शकवाचस्पत्यकोशस्य चाप्रामाणिकत्वे भवता हेत्वनुक्तेश्च। 'यत्तत्सूक्ष्ममविज्ञेयमि'ति परं ब्रह्म प्रकृत्य स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यत' इति नविलक्षणत्वाधिकरणशाङ्करभाष्ये क्षेत्रज्ञशब्दस्य परमात्मपरत्वोक्तेश्च।

"अन्याय्यं चानेकार्थत्वमिति न्यायात् रुद्रादिपदानां शङ्कर एव शक्तिर्न तु विष्णावपि। सर्वत्र व्यवहारकोशादौ तदर्थप्रसिद्धेः। विष्णुसहस्रनामनि

रुद्रशब्दान्तर्भावो गौण्या वृत्त्या संभवति योगमात्राश्रयणाद्वे"त्यपि न युक्तम्। सहस्रनाम्नां विष्णौ गौणवृत्तियोगमात्राश्रयणयोर्दूषितत्वात् रुद्रादिनाम्नामपि 'यानि नामानि गौणानि विख्यातानी'ति वचनबलात् विष्णौ प्रसिद्ध्यवगमेन सर्वत्र व्यवहारकोशादौ शङ्कर एव तेषां प्रसिद्धिरिति भवद्वचनस्यानुपादेयत्वाच्च। उभयत्र प्रसिद्धिसाम्ये सति अन्याय्यं चानेकार्थत्वमिति न्यायोदाहरण-स्यान्याय्यत्वाच्च।

त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते।
विष्णोः सहस्रनामापि निरन्तरशतार्थकम्॥

इत्यनेकार्थत्वे प्रमाणे जागरूके सति तस्यान्याय्यत्वोक्ते-रेवान्याय्यत्वाच्च। विना कारणं उक्तप्रमाणवचनस्याप्रामाण्ये शाबरवचनस्याप्यप्रामाण्यापत्तेश्च। किंच वाचस्पत्यकोशेऽन्तर्यामिणि प्रयोगप्रदर्शनपूर्वकं क्षेत्रज्ञपदस्य तदर्थकत्वोक्तावपि गौणवृत्तावाग्रहः कुतो भवतः? अस्य शब्दस्यास्मिन्नर्थे शक्तिरिति बोधयितुमेव खलु कोशप्रवृत्तिः। अस्यात्र लक्षणेति तात्पर्यादिव बोधसम्भवे तत्र किं कोशेन? अस्यात्र लक्षणेति नियमोऽपि तावन्न सम्भवति। तात्पर्यानुसारित्वाल्लक्षणायाः। अन्तर्यामिणि तात्पर्यसत्वे क्षेत्रज्ञपदं तत्र लाक्षणिकमित्येव कोशाभिप्रायश्चेत्तदपि किं वक्तव्यम्? अवचनसिद्धं ह्येतत्। निरूढलक्षणाप्रदर्शने कोशप्रवृत्तिश्चेत् तस्याः शक्तितुल्यत्वेन क्षेत्रज्ञशब्दस्य जीवार्थकत्वनियमासिद्धिः।

यच्चोक्तं "वत्सापनयनदोहनादिसमनन्तरभाविनः पयोहोमविधेः दुग्धपरत्वं परित्यज्य जलविषयकत्वं न कोऽपि कल्पयिष्यतीति तदापादनमपि वृथैव" इति तन्न। भावानवबोधात्। "रुद्रो बहुशिरा बभ्रुः" इति विष्णुसहस्रनामसु पाठात् "रौद्रं चरुं निर्वपेत्" इत्यादौ वैष्णवचरुनिर्वपणं स्यादित्यापादयता भवता रौद्रचरुनिर्वपणमन्त्रेषु प्रसिद्धविष्णुलिङ्गेष्वसत्सु, सत्सु च रुद्रलिङ्गेषु रुद्रपरत्वनिश्चये सुशके सत्यपि यदि वैष्णवचरुनिर्वपणमापाद्यते तर्हि मयाऽपि सत्स्वपि दुग्धलिङ्गेषु जलविषयकत्वं कुतो नापादनीयमित्यभिप्रायात्।

## जीवैक्यबोधने पदानां सार्थक्यचिन्ता

यदपि "इदंशब्दस्य न प्रमाणसिद्धसर्ववस्त्वर्थकत्वं भवद्दर्शितमङ्गीकुर्मः । 'इदमस्तु सन्निकृष्टे' इत्यभियुक्तवचनात् तथैव लोके प्रयोगदर्शनाच्च । तदितरार्थे लक्षणयैव प्रयोगः । न चेदं शरीरं इत्यत्र लाक्षणिकार्थकत्वं । हेतोरभावात् । सर्वदृश्यार्थत्वे वा शरीरपदवैयर्थ्यमवोचाम । न च भवन्मते इदंपदवैयर्थ्यमिति वाच्यम् । उदाहरणरूपेण प्रत्यक्षनिर्देशनार्थत्वात् । अत एवोत्तरश्लोके सामान्यविवक्षया 'सर्वक्षेत्रेषु' इत्युक्तम्" इति तदपि न ॥ 'इदमस्तु सन्निकृष्टे' इत्याद्यभियुक्तवचने सन्निकृष्टादिशब्दानां बुद्धिसन्निकृष्टार्थकत्वेन प्रमाणसिद्धसर्ववस्तूनां बुद्धिसन्निकृष्टत्वसम्भवात् इदमिति निर्देशोपपत्तेः । इदमः सर्वदृश्यार्थत्वे शरीरपदसार्थक्यञ्च वयमवोचाम । भवन्मते तु इदंपदवैयर्थ्यमपरिहार्यम् । सर्वक्षेत्रेष्वित्युक्तिमात्रेण विवक्षितार्थज्ञानसम्भवात् । उदाहरणप्रदर्शनेन किमधिकमाचरितं भवेत् ? न हि सर्वशरीरज्ञानमुदाहरणापेक्षम् । अस्मन्मते क्षेत्रपदेन समनन्तरवाक्ये वक्ष्यमाणं महाभूतादिकं विवक्षितमिति बोधनायेदंपदमावश्यकम् ।

यदुक्तम् "जीवं मां विद्धीत्युक्त्या गतार्थतेत्ययुक्तम् । लाधवविरहात् । छन्दोभङ्गापत्तेश्च । तथोक्तौ प्रथमश्लोकानुपयोग एव लाघवमिति चेन्न । शरीरादिविशिष्टस्य जीवशब्देनोपस्थितेः तस्य परमात्मत्वविधानायोगात् । अन्योन्याध्यासेन शरीरातिरिक्तस्यात्मनो लोकानां प्रत्ययविरहेण शरीरादेः पृथगात्मप्रदर्शनार्थत्वेन तत्सार्थक्यस्य पूर्वमुक्तत्वात्" । इति तदपि न ।

"जीवं भारत मां विद्धि सर्वदेहेषु निश्चयात् ।

इति विनापि छन्दोभङ्गमुपदेष्टुं शक्यत्वात् । शरीरादिविशिष्टोपस्थितौ तस्य परमात्मत्वविधानं भागत्यागलक्षणयैव निर्वहति इति तदयोगापत्तिभयं भवतो निर्मूलमेव । शरीरादिज्ञातृत्वविशिष्टोपस्थितावपि लक्षणां विना परमात्मत्वविधानायोग एवेति 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इति न्यायविषयतापातश्च ।

आत्मानं पार्थ मां विद्धि सर्वदेहेषु निश्चयात् ।

इत्यपि वक्तुं शक्यत्वेन आत्मशब्दस्य शरीरविशिष्टार्थकत्वस्य भवताऽनङ्गीकारेण क्लेशाभावश्च । अन्योन्याध्यासेन शरीरातिरिक्तात्मानमजानतां पृथगात्मप्रदर्शनस्य गीतायामादावेव कृतत्वेन पुनरत्र प्रदर्शने वैयर्थ्यं च ।

यदुक्तं "भवन्मते वैकुण्ठातिरिक्तस्थलेष्वपि नारायणो वर्तते चेत्

सर्वज्ञं खलु मां विद्धि सर्ववस्तुषु भारत ।

इत्येव पठ्येत । तत्रैव तात्पर्यस्य भवता स्वीकृतत्वात् किमर्थो द्राविडप्राणायामः प्रथमं क्षेत्रज्ञमुक्त्वा शरीरं क्षेत्रमिति भ्रममुत्पाद्य महाभूतादीनि सर्वाणि क्षेत्रमिति निर्ब्रुवता भगवता कृतः ? तत्रापि जीवात्मनोऽपरिगणनात् तज्ज्ञत्वं न लब्धमिति 'भक्षितेऽपि लशुने' इत्यादिन्यायविषयतापातः ।" इति तदपि न ।"क्षेत्रज्ञ आत्मा मनसो विभूतीः" इत्यादौ प्रसिद्धं क्षेत्रज्ञत्वं सर्वज्ञत्वमेव । तादृशमाहात्म्योपेतः क्षेत्रज्ञोऽहमेव नान्य इति वक्तुं क्षेत्रशब्दार्थकथनपूर्वकं क्षेत्रज्ञत्वस्य सर्वज्ञत्वरूपतां स्पष्टयितुं च क्षेत्रं मम शरीरमिति ह्युपदिश्यते । न तु भ्रम उत्पाद्यते । तत्र "सर्वज्ञं खलु माम्" इत्येवोक्ते 'भागवतादिप्रसिद्धः क्षेत्रज्ञो नाम कः ? भवानन्यो वा ?' इत्यर्जुनजिज्ञासाया अपरिहारप्रसङ्गेन यथोक्तमेव साध्विति न द्राविडप्राणायामता । पुरुषोत्तमयोगे हि लोकवेदप्रसिद्धपुरुषोत्तमनामसमन्वयः एवमेव दृश्यते । महाभूतादिषु जीवात्मनोऽपरिगणितत्वोक्तिरपि अस्मद्गीतातात्पर्यनिर्णयानवलोकमूलेत्युपेक्षणीया । तत्र हि प्रमाणवचनोदाहरणपूर्वकमभिमानिव्यपदेशाधिकरणन्यायेन महाभूतादिशब्दानां तदभिमानिजीववाचकत्वमप्युक्तं द्रष्टव्यम् ।

यदपि "यो यच्छरीरः स तज्ज्ञ इति भवद्दर्शितव्याप्तेश्च सुषुप्तिमूर्च्छादौ व्यभिचारिता । नैयायिकैरवयवोपचयापचयाभ्यां शरीरादिभेदस्वीकारात् । मूर्च्छितस्य शल्यक्रियायां शरीरभेदसत्वात् । पञ्चाग्निविद्योदितव्रीहियवादिशरीरे नित्यमूर्च्छितत्वाच्च । अन्यथा कर्मिणां विना कारणं दहनादिजनित-

महाक्लेशापत्तेर्दर्शितत्वात्। एतेन प्रतियोगिवैयधिकरण्यावच्छिन्न-साध्याभावाधिकरणवृत्तित्वं व्यभिचार इत्युक्तावप्यनिस्तार एव" इति तन्न। यो यच्छरीरः स तज्ज्ञ इति व्याप्तेः सुप्तिमूर्च्छादिव्यतिरिक्तस्थलेऽनपायात् श्रीकृष्णस्य सुप्तिमूर्च्छाद्यप्रसक्तेश्च तत्र भवतो व्यभिचारोद्भावनायासो हि व्यर्थः। तन्नियन्तृत्वरूपे तच्छरीरत्वे विवक्षिते तु सुप्तिमूर्च्छादौ हेत्वभावादेव व्यभिचाराप्रसक्तिश्च। व्रीहियवादिशरीरेषु नित्यमूर्च्छितत्वोक्तिरपि "अन्याधिष्ठिते पूर्ववदभिलापात्" इति ब्रह्मसूत्रविरुद्धत्वादुपेक्षणीया।

यच्चोक्तं "तदुत्थाप्याकाङ्क्षानिवर्तकत्वेनैकवाक्यत्वात् वाक्यभेद-दोषांभावं मन्वानोऽनधिगतमीमांसाशास्त्रसिद्धान्त एव। 'देवदत्तो गच्छति' 'यज्ञदत्तो निधनं गतः' इत्यादावपि देवदत्तगमनात् पूर्वं किं वृत्तम्? यज्ञदत्तनिधनोत्तरं किं भवति? इति उत्थाप्याकाङ्क्षासम्भवेन तन्निवर्तकत्वसत्वादेकवाक्यत्वापत्तेः। एका उत्थाप्याकाङ्क्षा अपरा उत्थिताकाङ्क्षेति विभागमपि नैष लेखको जानातीति अनेन कीदृशी शास्त्रचर्चा स्यात्"। इति तदपि न युक्तम्॥ अस्य हि कुचोद्यस्य उत्तरं गदाधरभट्टाचार्य एव प्रष्टव्यो भवता। न वयम्। "एकवाक्यत्वं च विशिष्टैकार्थप्रतिपादकत्वं तदुत्थाप्याकाङ्क्षानिवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतरवत्त्वं वा" इति अवयवगादाधर्यामाह भट्टाचार्यः।

यच्चोक्तं "अस्तु तदुत्थिताकाङ्क्षानिवर्तकत्वतात्पर्यम्। तथाप्येवं-विधैकवाक्यत्वं न वाक्यभेददोषहरणम्। अन्यथा 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणास्वीकारो मीमांसकानां व्यर्थः स्यात्" इति तदपि न। 'सोमेन यजेत' इत्यत्र लिङ्श्रवणात् श्रौतविधिशब्दे च श्रौतव्यापारनानात्वे शब्दानामतिगौरवमिति प्रवर्तनारूपव्यापारभेदेनानेकविधाने गौरवलक्षणवाक्य-भेदसम्भवेऽपि प्रकृते लिङादिविधिशब्दाभावात्। प्रीत्याऽर्जुनं बोधयतः कृष्णस्य वचने शब्दगौरवस्य भूषणत्वाच्च।

यदपि— "एतद्यो वेत्तीत्युक्ते क्षेत्राद्विलक्षणः क्षेत्रज्ञ उक्तः। तत्र क्षेत्रात् शरीरादेव पृथक्? किं वा तत्कारणादेरपि? किञ्च कीदृगिदं क्षेत्रं

यतोऽत्यन्तपार्थक्यं क्षेत्रज्ञस्य ? इत्यादिजिज्ञासायां 'तत्क्षेत्रं यच्च' इत्यादिग्रन्थः उत्थितः । तदनन्तरं ज्ञानसाधनोक्तिरिति कथमुत्तरासङ्गतिः ? भवन्मते सर्वज्ञत्वं कुतः साधनीयमिह विना प्रसङ्गात् ? 'वेदाहं समतीतानि' 'अहं सर्वस्य प्रभवः' 'विष्टभ्याहमिदं कृत्स्नं' इत्यादिना यदि सर्वज्ञत्वं नावगतं तदा महाभूताहङ्कारपरिगणनमात्रेण कथं सर्वज्ञत्वावगमः स्यात् ? संशयोच्छेदाय सर्वज्ञ इति शब्दमेव कुतो न प्रायुङ्क्त ? क्षेत्रान्तर्गतत्वे 'यच्च यादृक् च यद्विकारि' इत्यादि प्रतिज्ञानं कुतः ।" इत्यादि तन्न । यतो हि शरीरात्मनोरेवेतरेतराध्यासो न महाभूताद्यात्मनोः । अतः क्षेत्रज्ञपदस्य शरीरविशिष्टार्थकत्वभ्रान्तिवारणाय शरीरादेवात्मनः पृथक्त्वं वर्णनीयम् । 'शरीरादेवात्मा पृथक् ? किं वा तत्कारणादेरपि ?' इति चोत्थाप्यैवाकाङ्क्षा । नोत्थिता । कार्यात्पृथक्त्वे कारणात्पृथक्त्वस्य पृथगवक्तव्यत्वात् । न हि घटात् पृथग्भूतस्य पटस्य मृदोऽपृथक्त्वं शक्यशङ्कम् । अस्मन्मते तु क्षेत्रज्ञत्वस्य सर्वज्ञत्वरूपतास्फोरणाय महाभूतादिसर्वप्रपञ्चपरिगणनाऽवश्यकी । किञ्च सर्वज्ञत्वं कुतः साधनीयं विना प्रसङ्गात् इत्ययुक्तमेव । गीताया भगवन्माहात्म्यवर्णनद्वारा भगवति भक्त्युत्पादने हि तात्पर्यम् । अतो 'वेदाहं समतीतानि' इत्यादिना बहुशः सर्वज्ञत्वोक्तावपि क्षेत्रज्ञशब्दवाच्यत्वद्वाराऽपि सर्वज्ञत्वमत्र दृढीक्रियते । एतेन संशयोच्छेदाय सर्वज्ञशब्दमेव कुतो न प्रायुङ्क्त ? इति चोद्यमपि निरस्तम् । क्षेत्रज्ञशब्दवाच्यत्वमुखेनैव सर्वज्ञत्वसाधनार्थत्वादस्याध्यायस्य । 'क्षेत्रान्तर्गतत्वे यच्च यादृक् च इत्यादि प्रतिज्ञानं कुत' इति वदन् प्रष्टव्यः — विकारादेः क्षेत्रान्तर्गतत्वं किं भवान् नाङ्गीकरोति ? ओमिति ब्रुवाणः पठेदं शाङ्करं भाष्यवाक्यम् 'यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम्' इति । अनेन भवतोक्तं क्षेत्राच्छरीरादेव पृथक् किं वा तत्कारणादेरपि इत्यपि प्रत्युक्तम् ।

## तत्वमसीत्यत्राखण्डार्थबोधनिरासः

यच्चोक्तं "तत्त्वमसीत्यादौ विशिष्टोपस्थितिकाले विशेषणयोर्विरोधज्ञानमपि भवति। न हि घटवद्भूतलं घटाभाववदित्युक्ते विरोधज्ञानाभावेन शाब्दबोधः प्रथममुत्पद्यते इति केनापि स्वीक्रियत" इति तदपि न। घटघटाभावरूपधर्मिज्ञानं विना विरोधरूपतद्धर्मस्मरणासम्भवात्। अतो विशिष्टोपस्थित्यनन्तरमेव विशेषणयोर्विरोधज्ञानं न तु तत्समकालम्। विशिष्टोपस्थितिकाले विरोधज्ञानाभावेऽपि तदुत्तरक्षणे न शाब्दबोधापत्तिः। तदा विरोधस्मरणसत्वात्। तस्य च कार्यसहभावेन प्रतिबन्धकत्वात्।

किञ्च—

'सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः
पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः।
उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मधीः
सर्वैरेव ततः पदैरयमिह ज्ञेयः क्रमः सूरिभिः॥'

इति सङ्क्षेपशारीरकवचनं भवतः प्रतिकूलं द्रष्टव्यम्।

यच्चोक्तं "विशिष्टशुद्धयोरनिर्वचनीयभेदमात्रस्वीकारात् शुद्धोपस्थितिरपि भवत्येवेति द्वितीयक्षणे विशेषणत्यागपूर्वकशाब्दबोधो भवेदेव" इति तन्न। व्यवहारनिर्वाहार्थमनिर्वचनीयभेदं स्वीकुर्वतो भवतः कथं भेदं विस्मृत्य द्वयोरुपस्थित्योरभेदः व्यवह्रियते? वास्तवाभेदेऽपि विशेष्योपस्थितौ विशेषणस्यपि भानेन तस्या अखण्डोपस्थितित्वाभावेन अखण्डबोधेऽनुपयोग एव। भवतैव निष्प्रकारकोपस्थित्यर्थं भागत्यागलक्षणायाः स्वीकाराच्च। अन्यथा शक्तिजन्योपस्थितेरेव शाब्दबोधजनने भागत्यागलक्षणामात्रोच्छेदप्रसङ्गः। अभिधाव्यापारसमनंतरमेव शाब्दबोधाङ्गीकारेण लक्षणाव्यापारस्यानवसरदुःस्थत्वात्।

यच्चोक्तं "भवन्मते विशिष्टशुद्धयोर्भेदसत्वात् 'नीलघटवान्' इति बुद्ध्युत्तरं 'घटो नास्ति' इति ज्ञानं प्रसज्यते।" इति तदपि न। मया

विशिष्टशुद्धयोर्भेदाभेदाङ्गीकारादुक्तज्ञानद्वयस्य प्रतिबद्धयप्रतिबन्धकभावोपपत्तेः। विशिष्टशुद्धयोर्भेदाभेदेऽपि न विशिष्टोपस्थितेः शुद्धोपस्थितित्वम्। निष्प्रकारकोपस्थितेरेव शुद्धोपस्थितिपदेन विवक्षितत्वात्। सोऽयं देवदत्त इत्यत्र एकविशिष्टेऽपरविशिष्टाभेदबोधाऽसम्भवेऽपि कालभेदेन एकत्र विशेषणद्वयज्ञानोत्पत्तौ बाधकाभावात्। तस्यापि विशिष्टबोधात्मकत्वात्। एकत्र विशेष्ये कालद्वयसम्बन्धाभाने तस्य क्षणिकत्वनिराकरणानुपपत्तेश्च ॥

'पदद्वये लक्षणा चेदेव निरूढलक्षणेत्यनुक्तोपालम्भः' इति च स्वोक्तविस्मरणविजृम्भितम्। 'वैजयन्त्यां' पदद्वयलक्षणास्वीकारपक्षे 'लक्षणापक्षेपि निरूढत्वात्' इत्युक्त्वा एकपदलक्षणापक्षे 'लक्षणाया निरूढत्वविरहादि'त्युक्तेः ॥

यदप्युक्तं "अनाद्यविप्रतिपन्नप्रयोगसिद्धत्वमित्यलक्षणं निरूढस्य। पञ्चमीसमासषष्ठीसमासादिष्वर्थभेदसत्वेन कस्मिन्नर्थे प्रयोग इति विप्रतिपत्तिसत्वात्"। इति तदपि न। पञ्चमीसमासषष्ठीसमासादिषु सर्वत्र प्रयोगोऽस्तीत्यत्राविप्रतिपत्तेः। अन्यथा कस्मिन्नर्थे प्रयोग इति विप्रतिपत्तेरेवायोगात्।

यच्चोक्तं "अखण्डाकारवृत्तिविषये आकरग्रन्थेषु विस्तरो द्रष्टव्यः" इति तत्र अखण्डाकारवृत्तिविषये तस्याः समालोचनपुरस्सरं स्वप्रायितत्वसमर्थनमपि द्वैतग्रन्थेषु द्रष्टव्यमिति शेषं पूरणीयम्।

यदुक्तं "दर्शयतीत्यस्य शाब्दबोधानुकूलव्यापरवत्वार्थकत्वमलोकवेदसिद्धं 'पश्यार्थैश्चानालोचने' इत्यत्रालोचनार्थमात्रं सूचितम्। परं सोऽर्थश्च लक्षणयैव" इति तत्रेदं वक्तव्यं 'तमसः पारं दर्शयति' इत्यत्र लक्षणयापि शाब्दबोधानुकूलव्यापारवत्वार्थकत्वसम्भवेन भवदभिमते शब्दादपरोक्षोदये श्रुतेर्निरवकाशप्रमाणात्वं स्वप्रायितं स्यादिति।

यदप्युक्तं "बहुषु पशुषु स्थितेषु को गज इति जिज्ञासोः केनाऽपि गजमङ्गुल्या निर्दिश्यायं गज इत्युक्तस्य गजत्वप्रकारकसाक्षात्कार एव भवति न तु शब्दानुसारेण एतदभिन्नो गज इति"। तदप्यलौकिकम्। तत्र हि शाब्दबोध एव जायते नापरोक्षम्। अपरोक्षेऽपि पुरोवर्तिनि गजाऽभेदो न भासते गजत्वमात्रं भासते इत्यत्र को हेतुः? गजाभेदस्यातीन्द्रियत्वाद्वा तत्सन्निकर्षाभावाद्वा? नोभयमपि॥

वक्तव्यशेषे "परमात्मनोऽभिन्नत्वे 'रूपं देहि जयं देहि मोक्षं देहि' इत्याद्यभिलाषयैव तत्प्रेम स्यात्। अन्यथा प्रस्तरकाष्ठादिकमेव कुतो न भजेयुः" इत्युक्तमपि न। परमत्मनो भिन्नत्वेऽपि तस्य परमसुन्दरत्वात् तत्र परमप्रेमरूपा भक्तिः सम्भवति। न चैतावता प्रस्तरकाष्ठादिभजनापत्तिः तेषामसुन्दरत्वात्।

माहात्म्यज्ञानपूर्वक परमस्नेहस्यैव भक्तिशब्दार्थत्वमित्यादि तु आकरग्रन्थेषु द्रष्टव्यम्। माहात्म्यज्ञानरहितस्नेहस्य भक्तिरूपत्वं नारदभक्तिसूत्रस्यापि न सम्मतम्। "तत्रापि न माहात्म्यज्ञानविस्मृत्यपवादः" "तद्विहीनं जाराणामेव" इति सूत्रद्वयात्।

'तवाधिपत्रमेव ममाधिपत्रमि'ति वास्तवाभेदाभिप्रायेणैवोक्तौ बाधकं न किमपि पश्यामः। व्यावहारिकभेदो बाधकश्चेत् सोऽहमित्युपासनामपि भवान् त्यजेत्।

'यस्मिन् विज्ञाते सर्वमिदं विज्ञातम्' इति श्रुत्यर्थ एव गीतावाक्येनोक्त इत्यङ्गीकारेऽपि न नो हानिः। अत्यन्तमन्यस्यापि पुरुषोत्तमस्य सर्वशास्त्रतात्पर्य-विषयीभूतपुरुषोत्तमत्वज्ञाने सति मोक्षलाभात् तत्र सर्वप्रपञ्चज्ञान-फलस्यान्तर्भावेण सर्ववित्त्वं कृतकृत्यत्वं च गीतोक्तं घटत इति वक्तव्यम्। शेषं गतार्थम्॥

---

## वैजयन्तीद्वितीयपरिशिष्टे अपरामृष्टा अस्मदुद्भाविता दोषाः

1. दृष्टिसृष्टिपक्षाङ्गीकारात् क्षणिकत्वरूपमप्रतिष्ठत्वमपरस्परसम्भूतत्वं च तैरङ्गीकृतम्। तथा तन्मात्रेष्टानिर्वचनीयाविद्याहेतुकत्वस्य जगत्यङ्गीकारात् कामहैतुकत्वमपि तदिष्टमेव। किमन्यदित्युक्तमन्यत्वं सदसद्विलक्षणत्वरूपं तैरेव जगत उच्यते। (पृ-3-पं-10)

2. विशिष्टोपस्थितेः विशेष्यमात्रविषयकशाब्दबोधकारणत्वस्य कुत्राप्यदृष्टत्वात्। (पृ-11-पं-10)

3. किञ्च विरोधेन विशेषणत्यागः विचारमपेक्षते। ......... (पृ -11-12)

4. ऐक्यबोधस्यैव भेदभ्रमनिवारकत्वेन ऐक्यबोधस्य च भवदुक्तरीत्या उद्देश्यतावच्छेदकादिविरहेऽसम्भवेन केवलमखण्डार्थबोधेन भेदभ्रमवारणायोगात्। (पृ-12-पं-13)

5. वास्तविकभेदसत्वे स्वतन्त्रपृथक् सत्तालाभेन जीवपरयोर्भक्तत्वभजनीयत्वाद्ययोगः इति यदि भवान् मन्यते तर्हि भवदभिमत व्यावहारिकभेदसत्वेपि व्यावहारिकस्वतन्त्रपृथक्सत्तालाभेन भक्तत्वायोगसाम्यात् वास्तविकभेदस्यैव निन्दने बीजाभावः (पृ-14-पं-4)

6. व्यावहारिकभेदस्य दुर्वचत्वं अद्वैतमते (पृ-15-पं-12)